तोया चैव महागौरी दुर्गतिर्मिगिला तथा। गोदावरी भीमरथी कृष्णवर्णा भयकरा॥
तुगभद्रा सुप्रकारा वाह्या कावेरिरेव च। कृतमाला ताम्रवर्णी पुष्पभद्रोत्पलावती॥
नृसमा ऋषिकुल्या च इक्षुका त्रिदिवालया। लागुलिनी वंशधरी जबूश्च सुकलावती॥
ऋषिका वरवेगा च मदगा मद्वाहिनी। क्षमा देवी दया व्योमा पयोष्णी कालवाहिनी॥
५ कपना च विशाला च करतोया सुवाहिनी। ताम्रारुणा वेत्रवती सुभद्रा चाम्बवत्यपि॥
अद्रिका च इमा चैव सुप्रकारा हिरण्मयी। आपगालोपलाभासी सध्या तु वडवानदी॥
महेंद्रवाणी शाला च मालिका वलयावती। नीलोत्पलकरा चैव बाहुदा वनवासिनी॥
नदा चापरनंदा च सुनदा वसुवासिनी। एताश्चान्याश्च राजेंद्र नद्यस्त्वां विविधोदका.॥
सर्वपापप्रशमनाः सर्वलोकस्य मातरः। सतोयपूर्णैः कलशैरभिषिंचंतु पार्थिव॥
१० एतैर्यथोक्तैर्नृपराजराज्ये बृत्ताभिषेक पृथिवीं समग्रां।
ससागरां भुक्ष्व चिर च जीव। धर्मे च ते बुद्धिरतीव चास्तु॥
इति श्रीमद्भट्टशंकरात्मजभट्टनीलकण्ठकृते राजनीतिमयूखे राज्याभिषेकप्रयोगः॥

एवं कृताभिषेको राज्यं कुर्यात्। तच्च सप्तांगं॥ तानि च ‘ स्वाम्यमात्यसुहृत्कोशराष्ट्रदुर्गबलानि चेति ’॥ कामंदकोऽपि। ( १।१६ )
१५ “ स्वाम्यमात्यश्च राष्ट्रं च दुर्गं कोशो बलं सुहृत्। एतावदुच्यते राज्यं सत्वबुद्धिव्यपाश्रयं॥ ”
नीतिशास्त्रस्य दृष्टार्थत्वाच्च क्रमेऽभिनिवेशः कार्यः। तत्र स्वामी राजा।
तत्र देवानामंशाः संतीत्याह मनुः ( ७।४ )
“ इंद्रानिलयमार्काणां अग्नेश्च वरुणस्य च। चंद्रवित्तेशयोश्चैव मात्रा निर्हृत्य शाश्वतीः॥
“ यस्मादेषां सुरेंद्राणां मात्राभ्यो निर्मितो नृपः। तस्मादभिभवत्येष सर्वभूतानि तेजसा॥
२० ‘ सोऽग्निर्भवति वायुश्च सोऽर्कः सोमः स धर्मराट्। स महेंद्रः स ईशः स कुबेरश्च प्रभावतः ” ॥ इति॥
कामंदकोऽपि ( १।९–११, १३–१५ )
“ राजाऽस्य जगतो हेतुर्वृद्धेर्वृद्धाभिसमतः। नयनानन्दजननः शशांक इव तोयधेः॥
“ यदि न स्यान्नरपतिः सम्यक् नेता ततः प्रजा। अकर्णधाराजलधौ विप्लवेतेह नौरिव॥
“ धार्मिकं पालनपरं सम्यक्परपुरजयं। राजानमभिमन्यन्ते प्रजापतिमिव प्रजा॥
२५ “ न्यायप्रवृत्तो नृपतिरात्मानमथ च प्रजाः। त्रिवर्गेणोपसंधत्ते निहंति ध्रुवमन्यथा॥
“ धर्माद्वै यवनो राजा विजित्य बुभुजे भुवं। अधर्माच्चैव नहुषः प्रतिपेदे रसातलं॥
“ तस्माद्धर्मं पुरस्कृत्य यतेतार्थाय धार्मिकः। धर्मेण वर्धते राष्ट्रं तस्य स्वादु फलं श्रियः॥ ”
राजगुणास्तद्वृत्तं च नीतिसारे ( कामंदकीये १–१८–२० )
“ न्यायेनार्जनमर्थस्य रक्षणं वर्धनं तथा। सत्पात्रप्रतिपादिश्च राजवृत्तं चतुर्विधं॥
३० “ नयस्य विनयो मूलं विनयः शास्त्रनिश्चयः। विनयो हीन्द्रियजयस्तद्युक्तः शास्त्रमृच्छति। ”
तथा ( १।२१–२५ )
“ शास्त्रं प्रज्ञा धृतिर्दाक्ष्यं प्रागल्भ्यं धारयिष्णुता। उत्साहो वाग्मिता दार्ढ्यं आपत्क्लेशसहिष्णुता॥
“ प्रभावः शुचिता मैत्री त्यागः सत्यं कृतज्ञता। कुलं शीलं दमश्चेति गुणाः संपत्तिहेतवः।

---

१ अ[illegible]–[illegible]। २ [illegible]–आ।

" आत्मानं प्रथमं राजा विनयेनोपपादयेत् । ततोऽमात्यास्ततो भृत्यान् ततः पुत्रांस्ततः प्रजाः ॥
" सदानुरक्तप्रकृतिः प्रजापालनतत्परः । विनीतात्मा हि नृपतिर्भूयसीं श्रियमश्नुते ॥
" प्रकीर्णविषयारण्ये धावन्तं विप्रमाथिनं । ज्ञानाङ्कुशेन कुर्वीत वश्यमिंद्रियदंतिनं ॥ "
तथा ( १।२७,३६–३८,४० )
" विषयामिषलोभेन मनः प्रेरयतींद्रियं । तन्निरुंध्यात्प्रयत्नेन जिते तस्मिन् जितेंद्रियः ॥ ५
" एवं करणसामर्थ्यात्संयम्यात्मानमात्मना । नयापनयविद्राजा कुर्वीत हितमात्मनः ॥
" एकस्यैव हि योऽशक्तो मनसः सन्निबर्हणे । महीं सागरपर्यंतां स कथं ह्यवजेष्यति ॥
" क्रियावसानविरसैर्विषयैरपहारिभिः । गच्छत्याक्षिप्तहृदयः करीव नृपतिर्ग्रहं ॥
" शब्दः स्पर्शश्च रूपं च रसो गंधश्च पंचमः । एकैकमलमेतेषां विनाशप्रतिपत्तये ॥ "
पंचानां निदर्शनमाह ( १।४१–४७ ) १०
" शुचिदर्भांकुराहारो विदूरभ्रमणक्षमः । लुब्धकाद्गीतलोभेन मृगो मृगयते वधम् ॥
" गिरींद्रशिखराकारो लीलयोन्मूलितद्रुमः । करिणीस्पर्शसंमोहादालानं याति वारणः ॥
" स्निग्धदीपशिखालोके विलोकितविलोचनः । मृत्युमृच्छति संमोहात्पतंगः सहसा पतन् ॥
" दूरेऽपि हि भवन्दृष्टेरगाधसलिले वसन् । मीनस्तु सामिषं लोहमास्वादयति मृत्यवे ॥
" द्विरेफो गंधलोभेन कमले याति बंधनं । एकैकशो विनिघ्नंति विषया विषसन्निभाः ॥ १५
" क्षयी तु स कथं नस्यायुगपत्यं च सेवते ॥
" सेवेत विषयान्काले मुक्त्वा तत्परतां वशी । सुखं हि फलमर्थस्य तन्निरोधे वृथा श्रियः ॥
" धर्मादर्थोऽर्थतः कामः कामात्सुखफलोदयः । आत्मानं हंति तौ हत्वा युक्त्या यो न निषेवते ॥४९।
" सक्तोमासक्तमनसा कांतामुखावलोकने । गलति गलिताश्रुणा यौवनेन सह श्रियः ॥
" नामापि स्त्रीति संल्हादि विकरोत्येव मानसं । किं पुनर्दर्शनं तस्या विलासोल्लसितभ्रुवः ॥ २०
" रहः प्रचारकुशला मृदुगद्गदभाषिणी । कं न नारी रमयति रक्तं रक्तांतलोचना ॥ ५१ ॥
" मुनेरपि मनोऽवश्यं सरागं कुरुतेऽङ्गना । " ॥ ५२ ॥ तत्र कानिचिन्निदाति ( १।५४–५८ )
" मृगयाक्षास्तथा पानं गर्हितानि महीभुजां । दृष्टास्तेभ्यस्तु विपदः पांडुनैषधवृष्णिषु ॥
" कामः क्रोधस्तथा मोहो लोभो मानो मदस्तथा । षड्वर्गमुत्सृजेदेनमस्मिन् त्यक्ते सुखी नृपः ॥
" दंडक्यो नृपतिः कामात्क्रोधाच्च जनमेजयः । लोभादैलस्तु राजर्षिर्वातापी र्माहतोऽसुरः ॥ २५
" पौलस्त्यो राक्षसो मानान्मदाद्दंभोद्भवो नृपः । प्रयाता निधनं ह्येते शत्रुषड्वर्गमाश्रिताः ॥
" शत्रुषड्वर्गमुत्सृज्य जामदग्न्यो जितेंद्रियः । अंबरीषो महाभागो बुभुजाते चिरं महीम् ॥
" वर्धयन्निह धर्मार्थौ सेवितौ सद्भिरादरात् । निगृहीतेंद्रियग्रामः कुर्वीत गुरुसेवनम् ॥
" शास्त्राय गुरुसंयोगः शास्त्रं विनयवृत्तये । विद्याविनीतो नृपतिर्न कृच्छ्रेष्ववसीदति ॥ ५९ ॥
" वृद्धोपसेवी नृपतिः सतां भवति संमतः । ३०

---

१ शस्यांकुराहारो इति मुद्रितकामन्दकीयपाठः । २ चरन् इति मुद्रितपाठः । ३ गन्धलुब्धो मधुकरो दानासवविकासया इति मुद्रितपाठः । ४ क्षेमी तु स्यात्कथं वा सम पथ्य सेवते ( मु पाठ ) । ५ निकामं ( मु. पाठ ) । ६ हर्षतो मु पा । ७ वृद्धसे–मु–पाठ ।

" प्रेर्यमाणोऽप्यसद्वृत्तैर्नाकार्येषु प्रवर्तते । आददानः प्रतिदिनं कलाः सम्यक् महीपतिः ।
" जितेन्द्रियस्य नृपतेर्नीतिशास्त्रानुसारिणः । भवन्त्युज्ज्वलिता लक्ष्म्यः कीर्तयश्च नभस्पृशः ॥" तथा
" इयं हि लोके व्यतिरेकवर्तिनी स्वभावतः पार्थिवता समुद्धता ॥
" बलात्तदेन विनये नियोजयेन्नयस्य सिद्धौ विनयः पुरस्सरः ॥ ६४ ॥
५ " गुरुस्तु विद्याधिगमाय सेव्यते श्रुता च विद्या मतये महात्मनां ॥
" श्रुतानि पुण्यानि मतानि वेधसामसंशयं साधु भवंति भूतये " ॥ ६६ ॥
वेधसा पूर्वपुरुषाणां । विद्यानिरूपणं नीतिसारे ( २।२–७ )
" आन्वीक्षिकी त्रयी वार्ता दण्डनीतिश्च शाश्वती । विद्याश्चतस्र एवैता इति नो गुरुदर्शनं ॥
" आन्वीक्षिक्यात्मविज्ञानं धर्माधर्मौ त्रयीस्थितौ । अर्थानर्थौ तु वार्तायां दण्डनीतौ नयानयौ ॥ "
१० आन्वीक्षिक्या तर्कशास्त्रवेदांतायतर्भावः । त्रय्यां मीमांसास्मृत्यादेः । तथा ( २।१०–१६ )
" वर्णाः सर्वाश्रमाश्चैव विद्यास्वासु प्रतिष्ठिताः । ईक्षणाद्रक्षणात्तासां तद्धर्मस्यांशभाङ् नृपः ॥
" आन्वीक्षिक्यात्मविद्या स्यादीक्षणात्सुखदुःखयोः । ईक्षमाणस्तया तत्त्वं हर्षशोकौ व्युदस्यति ॥
" ऋग्यजुःसामनामानस्त्रयो वेदास्त्रयी मता । उभौ लोकमवाप्नोति त्रय्यां तिष्ठन् यथाविधि ॥
" अंगानि वेदाश्चत्वारो मीमांसान्यायविस्तरः । धर्मशास्त्रं पुराणं च त्रयीदं सर्वमुच्यते ॥
१५ " पाशुपाल्यं कृषिः पण्यं वार्ता वार्त्तानुजीविपि । संपन्नो वार्त्तया साधुर्न वृत्तेर्भयमृच्छति ॥
" दमो दण्ड इति ख्यातस्तस्माद्दण्डेन्महीपतिः । तस्य नीतिर्दण्डनीतिर्नयनान्नीतिरुच्यते ॥ ॥
" तयात्मानं च शेषाश्च विद्याः पायान्महीपतिः । विद्या लोकोपकारिण्यस्तत्पाता हि महीपतिः ॥२२॥
" अहिंसा सूनृता वाणी सत्यं शौचं दया क्षमा । वर्णिनां लिंगिनां चैव सामान्यो धर्म उच्यते॥२३॥
" स्वर्गानन्त्याय धर्मोऽयं सर्वेषां सर्वलिंगिनां ॥ " तथा ( २।३४–३५ )
२० " सर्वस्यास्य यथान्यायं भूपतिः संप्रवर्त्तकः । तस्याभावे धर्मनाशस्तदभावे जगच्च्युतिः ॥
" वर्णाश्रमाचारयुक्तो वर्णाश्रमविभागवित् । पाता वर्णाश्रमाणां च पार्थिवः सर्वलोकभाक् ॥ "
तथा ( ३।६–९ )
" आनृशंस्यं परो धर्मः सर्वप्राणभृतां यतः । तस्माद्राजाऽनृशंस्येन पालयेत्कृपणं जनम् ॥
" न हि स्वसुखमन्विच्छन् पीडयेत्कृपणं नृपः । कृपणः पीड्यमानो हि मन्युना हन्ति पार्थिवम् ॥
२५ " को हि नाम कुले जातः सुखलेशोपबृंहितः । अल्पसाराणि भूतानि पीडयेदविचारयन् ॥
" आधिव्याधिपरीताप अद्य श्वो वा विनाशिने । को हि नाम शरीराय धर्मापेतं समाचरेत् ॥ "
तथा ( ३।१३ १६ )
" स्वजनैः सज्जनं कुर्याद्धर्माय च सुखाय च । सेव्यमानस्तु स्वजनैर्मेघानति विराजते ॥
" हिमांशुमाली न तथा न चोत्फुल्लोत्पलं सरः । आनन्दयति चेतांसि यथा सज्जनचेष्टितम् ॥
३० " ग्रीष्मसूर्यांशुसंतप्तमुद्वेजनमनाश्रयं । मरुस्थलमिवोदग्रं त्यजेद्दुर्जनसंगतं ॥

---

१ मञ्जनकअबद्ध-काला । २ समुन्नता मु पाठ । ३ श्रुतानुबन्धीनि–मु–पाठ । ४ योगक्षेमाय देहिनां–मु–पाठ , लोकसंस्थितहेतव इत्यपि पाठान्तरं, ५ विद्याः स्वासु इति ब्रह्मर्षिपाठ । ६ वर्णिलिंगिनां इति मु पाठ । ७ सुखलेशेन लोभित मु पाठ । ८ सकृत इति मुपाठ ।

" निश्वासोद्गीर्णहुतभुग्धूमधूम्रीकृताननैः । वरमाशीविषैः सम कुर्यान्न त्वेव दुर्जनैः ॥
" क्रियतेऽभ्यर्हणीयाय स्वजनाय यथाञ्जलिः । तत साधु नर कार्यावर्जनाय हितार्थिना ॥ २१ ॥
" नित्य मनोपहारिण्या वाचा प्रह्लादयेज्जगत् । उद्वेजयति भूतानि क्रूरवाक् धनदोऽपि सन् ॥ (२३)
" हृदि विद्ध इवात्यर्थं यथा सतप्यते जनः । पीडितोऽपि हि मेधावी न ता वाचमुदीरयेत् ॥ (२४)
" प्रियमेवाभिधातव्य नित्य सत्सु द्विषत्सु वा । शिखीव केको मधुरा वाच ब्रूते जनप्रियः ॥ (२६) ५
" मद्रक्तस्य हसस्य कोकिलस्य शिखण्डिन । हरति न तथा वाचो यथा साधु विपश्चिताम् ॥(२८)
" ये प्रियाणि प्रभाषन्ते प्रियमिच्छन्ति सत्कृत । श्रीमतो वद्यचरिता देवास्ते नरविग्रहा ॥ " (३०)
तथा ( ३।३१-३२ )
" शुचिरास्तिक्यपूतात्मा पूजयेद्देवता. सदा । देवतावद्गुरुजनमात्मवच्च सुहृज्जनम् ॥
" प्रणिपातेन हि गुरून् सतोनूचानचेष्टितैः । कुर्वीताभिर्मुतान् भूत्यै देवान् सुकृतकर्मणा ॥ " १०
अनूचान' श्रोत्रियस्तस्य चेष्टितानि तत् क्रिया इत्यर्थ ॥
" सद्भावेन हरेन् मित्र सद्भावेन च बान्धवान् । स्त्रीभृत्यान् प्रेममानाभ्या दाक्षिण्येनेतर जनम् ॥ (३३)
" प्राणैरप्युपकारित्व मित्रायाव्यभिचारिणे । गृहागते परिष्वग शक्त्या दान सहिष्णुता ॥ ३५ ॥
" स्वसमृद्धिष्वनुत्सेकः परवृद्धिष्वमत्सर ॥
" बन्धुभिर्बन्धुसयोग स्वजने चतुरस्रता । तच्चित्तानुविधायित्वमिति वृत्त महात्मना ॥ ३६ ॥ १५
" अनन गच्छन्त्यियत महात्मनामिम च लोक च पर च विन्दतीति " ॥ ३७ ॥
अन्यानपि गुणानाह याज्ञवल्क्य ( आ. ३०९-११ )
" महोत्साह. स्थूललक्ष कृतज्ञो वृद्धसेवक । विनीत सत्वसपन्न कुलीन सत्यवाक् शुचिः ॥
" अदीर्घसूत्र स्मृतिमान् अक्षुद्रोऽपरुषस्तथा । धार्मिकोऽव्यसनश्चैव प्राज्ञ शूरो रहस्यवित् ॥
" स्वरन्ध्रगोप्ताऽऽन्वीक्षिक्या दण्डनीत्या तथैव च । विनीतस्त्वथ वार्त्ताया त्रय्या चैव नराधिप ॥ " २०
स्थूललक्ष. स्थूल महत् लक्ष्यमुद्देश्यमस्यासौ । कुलीन कन्यादानग्रहणयो सत्कुलसबधेन कुलमर्यादा-
रक्षणपर । अदीर्घसूत्र कार्येषु त्वरावान् । स्मृतिमानविस्मरणशील । अक्षुद्रोऽदोषद्वेषी ।
अपरुष परदोषाकीर्त्तन । अव्यसन व्यसनहीन व्यसनानि चाष्टादशाह मनु (१अ ७।४७–४८)
" मृगयाक्षा दिवा स्वाप परिवाद' स्त्रियो मद । तौर्यत्रिक वृथाट्या च कामजो दशको गण ॥
" पैशुन्य साहस द्रोह ईर्ष्यासूयाऽर्थदूषण । वाग्दण्डज च पारुष्य क्रोधजोऽपि गणोऽष्टक ॥" २५
तत्र सप्त कष्टतमान्याह मनु ( ७।५०–५२ )
" पानमक्षा स्त्रियश्चैव मृगया च यथाक्रम । एतत्कष्टतम विद्याच्चतुष्क कामजे गणे ॥
" दण्डस्य पातन चैव वाक्पारुष्यार्थदूषणे । क्रोधजेऽपि गणे विद्यात्कष्टमेतत्त्रिक सदा ॥
" सप्तकस्यास्य वर्गस्य सर्वत्रैवानुषङ्गिणः । पूर्वं पूर्वं गुरुतर विद्याद्व्यसनमात्मन ॥ "
परिवाद' परनिंदा । वृथाट्या वृथाटनं । पैशुन्यमज्ञातपरदोषज्ञापन । साहस साधोर्बधनादिनिग्रहः । ३०

---

१ मनो पहारिण्या मु पाठ । २ केकामधुर प्रियवाक्यत्व न प्रिय इति मु पाठ । ३ प्रयच्छन्ति च सत्कृति श्रीमन्तोऽनिन्द्यचरिता इति मु पाठ । ४ मुखान् इति मु पाठ । ५ स्वभावेन मु. पाठ । ६ दावान्यां मु. पाठ । ७ स्वरन्ध्रद्व धनअ—दोषानको न, क्षः—अपर दोषाकीर्तन ।

द्रोहश्छद्मवध । ईर्ष्या परगुणासहिष्णुता । परगुणेषु दोषाविष्करणमसूया । अर्थदूषणमर्थापहारो देयानामदानं च । वाक्पारुष्यं आक्रोशादि । मद्ये दोषाधिक्यमाह वराहमिहिर॰
" पत्नीयत्यपि मातर मदवशात्पत्नीं च मात्रीयति । श्वभ्रीयत्यपि मंदिरं दृढशिलं कूप च गेहीयति ॥
" स्वल्प वार्युदधीयतीश्वरमया मोहात्स्थलीयत्यपि।मित्रीयत्यपि विद्विष किमपर कुर्यान्न यन्मद्यप:"॥
५ नीतिसारे ( १४।५९ )
" वमन निर्गुणत्व च सज्ञानाशो विवस्त्रता । असबद्धप्रलापित्वमकस्माद्व्यसन मुहु ॥
" सेन्द्रियैर्वियोगोऽसद्भिश्च सयोगोऽनर्थसगम. । स्खलन वेपथुस्तन्द्रा चिंतातस्त्रीनिषेवण " ॥
सकल्पेनैव स्त्रीसग ' इत्यादि पानव्यसनमत्यत सद्भिर्गर्हित ' । तथा
" श्रुतशीलबलोपेता पानदोषेण भूयसा । क्षयमक्षीणनामानो जग्मुरन्धकवृष्णय ॥ ६२ ॥"
१० एव पाने वर्जितेऽपवादो योगयात्रायां
" अभ्यासनोत्सवभिषग्वचनोपदेशैः काम पिबेदमतिलोपकृदप्रकाश । "
तदेकनाश्यरोगादौ तद्वचनैरित्यर्थ । द्यूते दोषानाह कामन्दक ( अ १४।४४–५० )
" लोभो धर्मक्रियालोप कर्मणामप्रवर्तन । सत्समागमविच्छित्तिरसद्भि सह वर्तन ॥
" स्वल्पेऽप्यर्थे निराशित्वमसत्यपि च साशता ॥
१५ " प्रतिक्षण क्रोधहर्षौ विषादश्च प्रतिक्षण । प्रतिक्षण च सक्लेष साक्षिप्रश्न प्रतिक्षण ॥
" अन्यांवाचोंगदौर्बल्य शास्त्रार्थाप्रत्यवेक्षण । गूहन मूत्रशकृतोः क्षुत्पिपासोपपीडन ॥
" इत्यादीन् शास्त्रनिपुणा द्यूते दोषान् प्रचक्षते ॥
" पाडवो धर्मराजस्तु लोकपाल इवापरः । द्यूतेन द्विषता विद्वान्कलत्राण्यपहारितः ॥
" नलश्च राजा द्यूतेन हृते राज्यमहोदये । धर्मदारान्वने त्यक्त्वा परकर्माकरोत्प्रभु ॥
२० " द्यूतादनर्थसरभो द्यूतात्स्नेहक्षयो महान् । पक्षाणां संहताना च द्यूताद्भेद प्रवर्तत "॥ ५३॥ इति॥
मृगयादोषा उक्ता नीतिसारे ( अ.१४।१।८।२० )
" यानक्षोभो यानपातो यानाभिहरण तथा । क्षुत्पिपासाश्रमायासशीतवातोष्णपीडन ॥
" आभियानस्य सपत्या यानव्यसनज महत् । तु स प्रतप्तसिकताकुशकटकभूमय ॥
" ऋक्षाजगरमातगसिहव्याघ्रभयानि च । इत्यादिपृथिवींद्राणा मृगयाव्यसन महदिति॥"(२३-२४)
२५ अन्येष्वपि व्यसनषु लोकतो यथायथ दोषा ऊह्या॰ । विस्तरभयात्तु न ते सर्वे प्रपञ्चिता ॥
गुणेषु केषाचिद्व्यवस्थामाह मनु ( अ. ७।३२ )
" स्वराष्ट्रे न्यायवृत्त स्याद्भृश चडश्च शत्रुषु । सुहृत्स्वजिह्मः स्निग्धेषु ब्राह्मणेषु क्षमान्वित " ॥
याज्ञवल्क्य. ( आचारे ३३४ ) " स्याद्राजा भृत्यवर्गे च प्रजासु च यथा पिता ॥ "
अन्येऽपि गुणा उक्ता योगयात्राया
३० "मेधावी मतिमान्प्रभीनिवचनो दक्ष क्षमावानृजुर्धर्मात्माऽप्यनसूयको लघुकर षाड्गुण्यविच्छक्तिमान्।
" उत्साही पररध्रवित् कृतधृतिर्वृद्धिक्षयस्थानविच्छूरो न व्यसनी स्मरत्युपकृत वृद्धोपसेवी च य"॥

---

॰ १ गमन विह्वलत्वच इति मु पाठ । ( गमन यथा तथा सचरण । विह्वलत्व अनायत्त शरीर । इति टीकायां )। २ अ १४।६० । ३ अ १४।६१ ४ सत्यप्यर्थे इति मु-पाठ । ५ शमित्ता इति मु पाठ. । ६ अभ्यायामोऽगदौर्बल्य-यानवतो इति मु पाठ । ७ कृषनव—प्य प्यपि इति मु पाठ । ८ ह्म—ता ९ ईरअनटवधच—ध

तथा
" परीक्ष्यकारी न विकत्थनश्च दृढप्रतिज्ञोऽतिदृढप्रहारी ।
" जितेंद्रिय स्याज्जितकोपलोभनिद्रालस स्यात्परिग्रहश्च ॥
" त्यागी विनीत' प्रियदर्शनश्च व्यपेतमोह. प्रतिपत्तियुक्त. ।
" देशस्य कालस्य च भागवेत्ता स्वय च य स्याद्व्यवहारदर्शी ॥ ५
" शब्दार्थविज्ञानपटु प्रगल्भ. सग्रामविद्याकुशलोऽभिजात ।
" मिताभिभाषी मितसत्यवक्ता दैवान्वितो यश्च स धाम लक्ष्म्या ॥ "
त्यागीत्युक्त । तत्र पात्रे दातव्यमपात्रे दातुरनिष्टमुक्त मिहिरेण
" गुणैः समस्तैरपि सप्रयुक्ता कन्येव पित्रा विगुणाय दत्ता ।
" करोत्यकीर्तिं सुखविनहानि शास्त्रेतरज्ञानजडाय दात्तु ॥ " १०
अपात्रेऽपि कचिद्दानमुक्त भारते
" यो ज्ञातिमनुगृह्णाति दरिद्र दीनमातुर । सपुत्रपशु यवृद्धि च श्रेयश्चानन्त्यमश्नुते ॥
" ज्ञातयो वर्द्धनीयास्तैर्य इच्छ यात्मन शुभ । विगुणाश्चापि सरक्ष्या ज्ञातयो भरतर्षभ ॥
" किपुनर्गुणवन्तस्ते त्वत्प्रसादाभिकाङ्क्षिण । ज्ञातिभिर्विग्रहस्तात न कर्तव्यो भवार्थिनेति ॥ "
तस्य कृत्यमुक्त मिहिरेण "विचिन्त्य कार्याणि निशावसाने द्विषत्सुहृन्मडलसश्रितानां । १५
" बलार्थदेशेषु नियोजिताना समाश्रिताना च कृताकृतानि ॥ "
तथा " सवेणुवीणापटहस्वनेन गीतेन पूर्व व्यपनीतनिद्र ।
" शय्या त्यजेत्तूर्यरवावसाने शृण्वन् गिरो मगलपाठकाना ॥ " तदुत्तरमाचारमयूखोक्तप्रकारेण
शौचदतधावने कुर्यात् । तत्र दतधावनत्यागे परीक्षोक्ता योगयात्राया
" अभिमुखपतित प्रशातदिक्स्थ शुभमतिशोभनमूर्ध्वसस्थित च । २०
" अशुभकरमतोऽन्यथाप्रदिष्ट स्थितपतित च करोति मिष्टमन्न ॥ "
श्मश्रुकर्माणि विशेष
" राज्ञ कार्य पचमे पचमेऽन्हि क्षौरश्च वा श्मश्रु तस्योदये वा ॥
' त्यक्त्वा तारा सप्त पचत्रिपूर्वा यात्राकाले नैव कार्य न युद्धे ॥ "
ततश्च पचागादिश्रवणमुक्तम् । " श्रुत्वातिथि भग्रहवासर च प्राप्नोति धर्मार्थयशांसि सौख्य। २५
" आरोग्यमायुर्विजय शुभ च दु स्वप्ननाश च तथा विदध्यात् ॥ "
आयुर्जनकं विजयार्थ दुःस्वप्ननाशक च कर्म कुर्यादित्यर्थ ।
दु स्वप्नाश्चाचारमयूख उक्ता । तच्छातयः शांतिमयूखे वक्ष्यत । तत कृत्य
" प्रणम्य देवांश्च गुरूंश्च पूर्व दत्वा च गा वत्सयुता द्विजाय ।
" दृष्ट्वा मुख सर्पिषि दर्पणे च सर्पिश्च दद्यात्सहिरण्यमेव ॥ " ३०
ततश्च पर्वादौ भूदान निबधादिदान च कुर्यादित्याह याज्ञवल्क्य' ( आचारे ३१८ )
" दत्वा भूमिं निबध वा कृत्वा लेख्य च कारयेत् । आगामिभद्रनृपतिपरिज्ञानाय पार्थिवः ॥ "
निबधो वृत्तिः । भद्रो धार्मिक । लेख्यप्रकारमपि स एवाह ( आचारे ३१९।२० )

" पटे वा ताम्रपट्टे वा स्वमुद्रोपरिचिन्हितं । अभिलेख्यात्मनो वंश्यान् आत्मानं च महीपतिः ॥
" प्रतिग्रहपरीमाणं दानछेदोपवर्णनं । स्वहस्तकालसंपन्नं शासनं कारयेत्स्थिरम् ॥ "

प्रतिगृह्यत इति प्रतिग्रहो भूमिवस्त्रादि । तस्य परिमाणं । दानं दीयमानक्षेत्रादि तस्य छेदो मर्यादा । स्वहस्तेन स्वहस्तलिखितेन । कालेन च शकवर्षमासपक्षदिनरूपेण कारयेत्सं-
५ धिविग्रहादिकारिणा

"संधिविग्रहकारी तु भवेद्यस्तस्य लेखकः । स्वयं राज्ञा समादिष्टः स लिखेद्राजशासनमिति" स्मरणं त्[?] ।
तथा

" प्रेषयेच्च तथा चारान्स्वेष्वन्येषु च सादरं । ऋत्विक्पुरोहिताचार्यैराशीर्भिरभिनन्दितः ॥
" दृष्ट्वा ज्योतिर्विदो वैद्यान् दद्याद्गां काञ्चनं महीं । नैवेशिकानि च तथा श्रोत्रियाणां गृहाणि च ॥ "

१० नैवेशिकानि विवाहोपयोगीनि । ततश्च सभां प्रविशेदित्युक्तं मिहिरेण

" स्मितप्रसन्नप्रथमाभिभाषितैः प्रसादवृष्ट्या करसंग्रहैश्च ।
" यथानुकूलं हृदयान्यपि द्विषां प्रसादयन् धर्मसभां समाश्रयेत् ॥

सभाप्रवेशनानन्तरमाह मनुः ( अ ७.१४७ )

' तत्र स्थितः प्रजाः सर्वाः प्रतिनन्द्य विसर्जयेत् । विसृज्य च प्रजाः सर्वाः मंत्रयेत्सह मंत्रिभिः ॥"

१५ तत्र च दण्ड्यान् दण्डयेदित्याह वराहमिहिरः

" क्षमान्वितोऽस्मीति विचिन्त्य चैव दण्ड्येषु दण्डक्षमणं न धर्मः ।
" दण्डप्रभावो हि स दुर्जनस्य हन्तेन यो जीवति जीववर्गः ॥
" सुतरामभिवर्द्धतेऽभिमानो नीचानां क्षमयान्विते नृपे च ।
" अत उग्रतरेण ते निवार्या येनान्येऽपि खलास्तथा न भूयः ॥

२० " यस्मिन् गृहीते सहसापराधो महाजनस्त्रासमुपैति तस्मिन् ।
" दण्डो निपात्यो मनुजेश्वरेण कालान्तरेऽन्यद्व्यपदिश्य कार्यं ॥" दण्डाकरणे चानिष्टं । यथोक्तं

' द्विरद इव मदेन विप्रयुक्तो विषरहितो भुजगो यथासिश्च कोशः ।
" परिभवमुपयाति नापराधे यदि मनुजाधिपतिः करोति दण्डं ॥ '

दण्डश्च योग्य एव कार्य इत्युक्तं योगयात्रायां

२५ " एकस्य तुल्योदरपाणिपाद दण्डाय भीताः प्रणमन्ति मर्त्याः ।
" अत्युग्रदण्डादपि चोद्विजन्ते दण्डोपराधप्रतिमः शिवाय ॥"

केषांचिच्च पञ्चयज्ञवदावश्यकत्वमुक्तं मिहिरेण

" दुष्टस्य दण्डः सुजनस्य पूजा न्यायेन कोशस्य च संप्रवृद्धिः ।
" अपक्षपातोऽर्थिषु राष्ट्ररक्षा पञ्चैव यज्ञाः कथिता नृपाणां ।" मनुः ( अ ७।१५३-१५५ )

३० " कन्यानां संप्रदानं च कुमाराणां च रक्षणं । दूतसंप्रेषणं चैव कार्यशेषं तथैव च ॥
" अन्तःपुरप्रचारं च प्रणिधीनां च चेष्टितं । कृत्स्नं चाष्टविधं कर्म पञ्चवर्गं च तत्वतः ॥
" अनुरागापरागौ च प्रचारं मण्डलस्य च ॥ " अष्टविधं कर्म प्रचेता आह

" आदाने च विसर्गे च तथा प्रैषनिषेधयोः । पञ्चमे चानुवचने व्यवहारस्य चेक्षणे ॥

---

१ ख–प्रीतिग्रह ।

" दण्डशुद्धयोः समायुक्तस्तेनाष्टगतिको नृपः " ॥ शुद्धिः प्रायश्चित्त । पञ्चवर्गं
" सहाया॰ साधनोपाया विभागो देशकालयोः । विनिपातप्रतीकार सिद्धिः पञ्चाङ्गमिष्यते ॥ "
" मनु ( ७।२१९ )
" उपेतारमुपाय च सर्वोपायाश्च कृत्स्नश । एतत्त्रयं समाश्रित्य प्रयतेतात्मसिद्धये ॥ "
ततश्च भोजनमुक्त योगयात्रायां ५
" स्नातश्च तस्मिन्विनियुज्य साधून् सग्रामविद्यादिविभक्तकालः ।
" सर्वाणि कार्याणि यथाक्रमेण कृत्वा गृह भोक्तुमथो विशेत्स " । मनुरपि ( अ ७।२२०।२२ )
" एव सर्वमिदं राजा सह सम्मन्त्र्य मंत्रिभि । व्यायम्याप्लुत्य मध्यान्हे भोक्तुमन्त पुर व्रजेत् ॥
" विषघ्नैरगदैश्चास्य सर्वद्रव्याणि योजयेत् । विषघ्नानि च रत्नानि नियतो धारयेत्सदा ॥ "
भोजनमाह स एव ( ७।२२१ ) १०
" तत्रात्मभूतै. कालज्ञै रक्षार्थैः परिचारकैः । सुपरीक्षितमन्नाद्य अद्यान्मन्त्रैर्विषापहैः ॥ "
कामन्दकोऽपि ( ७।९-१० )
" याने शय्यासने पाने भोज्ये वस्त्रे विभूषणे । सर्वत्रैवाप्रमत्त स्याद्बुध्येत विषदूषितं ।
" विषघ्नोदके स्नातो विषघ्नमणिभूषित॰ । परीक्षित समश्नीयाज्जाङ्गलीविद्भिषग्वृत ॥ "
जागली आरण्यवृश्चिकादि । विष । तद्वित् तत्परिहारविदित्यर्थ । तत्र भोजनसमये विषदिग्धान्न- १५
परीक्षार्थं पक्षिण स्थाप्याः । तेषा च चेष्टया विष ज्ञेय । यथोक्त नीतिसारे ( ७।११-१३ )
" भृगराज शुकश्चैव सारिका चेति पक्षिण । क्रोशति भृशमुद्विग्ना विषपन्नगदर्शनात् ॥
" चकोरस्य विरज्येते नयने विषदर्शनात् । " विरज्येते निर्मीलिते भवत ।
" व्यक्त च माद्यति क्रौंचो म्रियते मत्तकोकिल॰ । जीव॰ जीवस्य च ग्लानिर्जायते विषदर्शनात् । "
ग्लानी रोगावृतता । २०
" एषामन्यतमेनापि समश्नीयात्परीक्षित " । परीक्षामाह कामन्दक ( ७।१५-१६ )
" भोज्यमन्न परीक्षार्थं प्रदद्यात्पूर्वमग्नये । वयोभ्यश्च ततो दद्यात्तत्र लिगानि लक्षयेत् ॥ "
अग्निमध्ये क्षिपेदित्यर्थ. ।
" धूमार्चिर्नीलता वन्हे शब्दस्फोटश्च जायत । अन्नेन विषदग्धेन वयसा मरण भवेत् " ॥
द्रव्यविशेषेण परीक्षामाह स एव ( ७।२० ) २५
' रसस्य नीला पयसश्च ताम्रा मद्यस्य तोयस्य च कोकिलाभा ।
" श्यामा च दैत्रो विषदूषितस्य वन्हौ भवत्यूर्ध्वगता च लेखा ॥ "
विषदिग्धवस्त्रपरीक्षोक्ता नीतिसारे ( ७।२३ )
" प्रावाराभरणाना च श्याममण्डलकर्णिता । तन्तूर्णीपक्ष्मणा लोम्नां स्याद्भ्रशश्च विषाश्रयात् ॥ "
ऊर्णावस्त्राणा लोम्ना भ्रश स्यादित्यर्थ. । विषदायिना च पुरुषाणा लक्षणमुक्तं नारदेन ३०
" मुखस्य श्यामवर्णत्वं त्वग्भेदो जृंभण मुहु । स्खलनं वेपथु स्वेद आवेशो दिग्विलोकनम् ॥

---

१ व्यायम्येति मुद्रित मनु पाठ । २ आंगुलावीद् मुद्रित मु पाठ । ३ सुव्यक्त—मु पाठ । ४ कोकिल-किल मु पाठ । ५ नित्यं मु पाठ । ६ वत्स्या मु. पाठ । ७ तन्तूनां इति पाठ ।

" स्वकर्मणि स्वभूमौ स्यादनवस्थानमेव च। लिंगान्येतानि निपुणं लक्षयेद्विषदायिनामिति " ॥
गृहे सर्पाद्युपद्रवनिरासार्थमुपायमाह कामन्दक' ( ७।१४ )
" मयूरपृषतोत्सर्गे न भवति भुजंगमा.। तस्मान्मयूरपृषतान् भवने नित्यमुत्सृजेत्।
" शयनस्य गृहे तद्वन्नकुलं स्थापयेन्नृप " इति ॥ इति विषपरीक्षा।
५ पूर्वं परीक्षितमन्नमनेकविधं भक्ष्यभोज्यादिकमाचारमयूखोक्तरीत्या भुञ्जीत
तत्र च मक्षिकानिवारणार्थं व्यजनार्थं च स्त्रीभिः स्पर्शमनुजानाति मनु ( अ ७।२२३–२४ )
" परीक्षिताः स्त्रियश्चैव व्यजनोदकधूपनै.। वेषाभरणसंयुक्ताः संस्पृशेयु समाहिताः ॥
" एवं प्रयत्नं कुर्वीत पानशय्यासनाशने। स्नाने प्रसाधने चैव सर्वालंकारकेषु च ॥ "
इति भोजनम्। मनु ( अ. ७।२२५–२२६ )
१० " भुक्तवान्विहरेच्चैव स्त्रीभिरन्तःपुरे सह। विहृत्य च यथाकामं पुन कार्याणि चिंतयेत् ॥
" अलङ्कृतश्च संपश्येदायुधीयं पृथग्जनं। वाहनानि च सर्वाणि शस्त्राण्याभरणानि च ॥ "
ततः पुनः प्रसाधनादि कार्यं ( कामन्दकीये ७।२८–२९ )
" प्रसाधनादि यत्किंचित्तत्सर्वं परिचारका। उपानिन्युर्नरेन्द्राय सुपरीक्षितमुद्रितं ॥
" परस्मादागतं तच्च तच्च सर्वं परीक्षयेत्। सदा स्वेभ्य. परेभ्यश्च रक्षेद्राजा सुरक्षित " ॥
१५ अनन्तरं च मृगयाद्यर्थं यानाद्यारोहेदिति कामन्दक. ( ७।३० )
" यानं वाहनमारोहेत् ज्ञात यात्रोपपादितं। अविज्ञातेन न तथा संकटेन न संव्रजेत् ॥ "
ज्ञातमन्यै. परीक्षितं। यात्रोपपादितं तत्तद्यात्राया योग्यं। यथा व्याघ्रादिमृगयाया हस्त्यादि।
तदा च खड्गावपि बिभृयात्। तत्र खड्गलक्षणं योगयात्रायां
" अंगुलशतार्द्धमुत्तम ऊनः स्यात्पञ्चविंशति खड्गः।
२० " अंगुलमानात् ज्ञेय समांगुलस्थो व्रण शुभद " । केचनव्रणा शुभदा इत्युक्तं
" श्रीवृक्षवर्द्धमानातपत्रशिवलिंगकुंडलाब्जानां। एते व्रणा प्रशस्ताध्वजायुधस्वस्तिकानां च " ॥
व्रणानामशुभत्वं तत्रैव
"कृकलासकाककर्कक्रव्यादकबंधवृश्चिकाकृतय। खड्गे व्रणा न शुभदा वंशानुगता प्रभूताश्चेति "॥
तदाकारस्तत्रैव
२५ " गोजिह्वासंस्थानो नीलोत्पलवंशसदृशश्च। करवीरपत्रसदृशश्चंडकरो मंडलाग्र प्रशस्तश्च ॥"
मंडलाग्रः खड्गः। तथा
" नाकारणं न विवृणुयात् न विघट्टयेच्च। पश्येन्न तत्र वदनं न वदेच्च मूल्यम् ॥
" देशं न चास्य कथयेत्प्रतिमानयेच्च। नैव स्पृशेन्नृपतिरप्रयतोसि यष्टिं ॥ "
प्रतिमानयेत्पूजयेत्। अप्रयतो शुचि। खड्गादिसंस्कारमाह वराहमिहिर
३० " अर्कपयोहुडविषाणमषीसमेत पारावताखुशकृता च युतप्रलेप।
" शस्त्रस्य तैलमथितस्य ततोऽस्य पानं पश्चाच्छितस्य न शिलासु भवेद्विघात ॥
" क्षारे कदल्यामथितेन युक्ते दिनोषिते पायितमायुध यत्।

---

१ घ—भृपते। २ रयखचघअनदट–प्रवदने। ३ घअनदयरदेश–आयुधन।
४ शार्ङ्गधरयथनकट–कय, घ–कसक।

" सम्यक् स्थित चाश्मनि नैति भग न चान्यलोहेष्वपि तस्य कौक्ष्य ॥"
इति खड्गलक्षण । अश्वादिलक्षणानि बलनिरूपणे वक्ष्यामः ।
अथ मृगया । सा त्रिविधा । जलस्थलान्तरिक्षभेदात् । सा च यद्यपि पूर्वं व्यसनमध्ये परिगणिता तथापि
" अन्यकार्यविरोधेन कुर्याद्वाखेटक नृप " इत्यादिवचनादत्यनासक्तेन कार्या ।
अस्यां च गुणोऽप्युक्त' कालिदासेन ( शाकुन्तले २।५ ) ५
" मेदश्छेदकृशोदर लघु भवत्युत्थानयोग्य वपु । सत्वानामपि लक्ष्यते विकृतिमच्चित्त भयक्रोधयो ॥
"उत्कर्ष स च धन्विना यदिषव सिध्यंति लक्ष्येऽचले। मिथ्यैव व्यसन वदन्ति मृगयामीदृग्विनोद' कुतः॥"
कामन्दकोऽपि
" आमाद्यो हि जीर्यते सा योग्यैव विधानिर्श । चरेषु यत्र लक्ष्येषु बाणसिद्धिश्च जायत" इति॥
तत्र जलमृगयामाह कामन्दक ( ७।३४ ) १०
" परितापिषु वासरेषु पश्यन् तटलेखा स्थितमाप्तसैन्यचक्र ।
" सुविशोधितनक्रमीनजाल व्यवगाहेत जले सुहृत्समेत. ॥" तथा ( ७।३२ )
" अधार्मिकाश्च क्रूराश्च दृष्टदोषाश्चिराकृतान्यपरेभ्योऽभ्यागताश्चैव दूरेणैव समाचरेत्॥"तथा (७।३३)
" महावातसमुद्भूतामपरीक्षितनाविका । अन्यनौप्रतिबद्धां वा लोपयेन्नावमातुरो ॥ "
लोपयेन्नागीकुर्यात् इत्यर्थ । तत्र च १५
" जालैश्च बडिशैश्चैव शक्तिभि कटकैस्तथा । मत्स्यकच्छपराजीवान् हन्याद्विगतसभ्रम ॥ "
इति जलमृगया । स्थलमृगयामाह चाणक्य
" सुपरिक्षितरक्षिताना तु सीम्नो लघुयानस्तु मृगाटवीमुपेयादिति " । कामन्दकापि ( १४।२८ )
" अथ चेन्मृगयाक्रीडा वाञ्छेत्तन्नगरान्तिके । कारयेन्मृगयारण्य क्रीडाहेतोर्मनोरम ॥
" अकण्टकलतागुल्म विषपादपवर्जित । शोधितग्राहसलिल सुगभीरजलाशय ॥ २०
" नानापुष्पसमाकीर्ण हस्तिनीकलभान्वितम् । अगम्य रिपुसैन्याना मन प्रीतिविवर्द्धन ॥
" तद्वनेचराश्चित्तज्ञै क्लेशायाससहैर्दृढै । मृगयारक्षिभि स्वाप्तै प्रक्रीडेद्वीरमानसः ॥ "
वनेचरा मृगादयस्तेषा क्रोधभयाविष्ट चित्त जानंति ते ।
" तत्कर्मी तु नरेंद्रस्य जनो जितपरिश्रम । क्रीडनायास्य विविधा मृगजाती प्रवेशयेत् ॥ ३८ ॥
" यदा च प्रविशेद्राजा क्रीडनार्थं तथा बहिः । सन्नद्ध यन्तरक्षितस्तैन्य दूरातगोचरम्॥ ४० ॥ २५
" विधिरेव[5] समादिष्टो मृगयाक्रीडने वर । न गच्छेदन्यथा राजा मृगया मृगयुर्यथा " ॥ ४२ ॥
लुब्धकवदेकाकी न गच्छेदित्यर्थ । एवमनासक्त' श्येनादिक्रूरपक्षिभिरन्तरिक्षमृगयामपि कुर्यात् ।
इति मृगयानिरूपणम् ।
ततो गृहमागत्य सायकृत्य कार्यमित्याह मनु ( अ ७।२२७–२२९ )
" सन्ध्या चोपास्य शृणुयादन्तर्वेश्मनि शस्त्रभृत् । रहस्याख्यायिना चैव प्रणिधीना च चेष्टितम् । ३०
" गत्वा कक्ष्यान्तर सम्यक समनुज्ञाप्य त जन । प्रविशेद्भोजनार्थ तु स्त्रीभिरत पुर पुन' ॥

---

१ अमलयवकघर्षरव—बले । २ कामन्दकीये १४।३० । ३ सम्भूतजलदाशय इति मुद्रितपाठ १४।३२ । ४ नानाविहगसकुल इति मुद्रितपाठ ( ३३ ) । ५ तत्कर्मातो मु पा ६ प ।

" तत्र भुक्त्वा पुनः किंचित्तूर्यघोषै प्रहर्षितः । संविशेच्च यथाकालमिति ॥ "

विविक्ते च मंत्रं कुर्यादित्याह मनु ( अ ७।५८, ६०–६२ )

" सर्वेषा तु विशिष्टेन ब्राह्मणेन विपश्चिता । मन्त्रयीत परं मन्त्रं राजा षाड्गुण्यसंयुतम् ॥

" अन्यानपि प्रकुर्वीत शुचीन् प्राज्ञानवस्थितान् । सम्यगर्थसमाहर्तॄन् सामान्यान्सुपरीक्षितान् ॥

५ " निवर्ततास्य यावद्भिरितिकर्तव्यता नृभि । तावतोऽतन्द्रितान् दक्षान् प्रकुर्वीत विचक्षणान् ॥

" तेषा मध्ये नियुञ्जीत शूरान् दक्षान् कुलोद्गतान् । शुचीनाकरकर्मान्ते भीरूनन्तर्निवेशने ॥

आकरा. सुवर्णाद्युत्पत्तिस्थानानि । कर्मान्ते धान्यादिसंग्रहस्थाने । अन्तर्निवेशने शयनादिगृहे भीरून् । शूरा हि तत्रैकान्ते कदाचित् राजानं निहन्युः ।

" अध्यक्षान् विविधान् कुर्यात्तत्र तत्र विपश्चित । ( ७।८१ )" तत्र तत्र हस्त्यश्वादौ ।

१० " दूत चैव प्रकुर्वीत सर्वशास्त्रविशारद । इङ्गिताकारचेष्टाज्ञं शुचिं दक्षं कुलोद्गतं ॥

"अनुरक्तः शुचिर्दक्ष स्मृतिमान्देशकालवित् । वपुष्मान् वीतभीर्वाग्मी दूतो राज्ञ प्रशस्यते" (७।६३–६४)

पूर्वश्लोकोक्तयो शुचिदक्षत्वयोरत्र पुनरुक्ति प्रशंसार्था ।

तत्रैव विविक्ते शस्त्रधरस्थारादीनामशस्त्रधराणा वाक्यानि शृणुयात् । तदुक्तम्

" तत्र शस्त्राणि धार्याणि चाराणा भेदशङ्कयेति " ।

१५ तत्र सर्वदा । राजसमीपवर्तिना सेवकानां लक्षणमाह कामंदक ( ५।२१–३० )

" भर्तुरर्द्धासने दृष्टिं मुहुर्नान्यत्र निक्षिपेत् ।

' कोऽत्रेत्यहमिति ब्रूयात् सम्यगाज्ञापयेति च । आज्ञां चावितथां कुर्याद्यथाशक्त्याविलंबित ॥

" उच्चै प्रहसनं कासं ष्ठीवनं कुत्सनं तथा । जृम्भणं गात्रभंगं च पर्वास्फोटं च वर्जयेत् ॥

" प्रविश्य सानुरागस्य चित्तज्ञस्य च संमत । समर्थयंश्च तत्पक्ष साधु भाषेत भाषिते ॥

२० " तन्नियोगेन वा ब्रूयादर्थं सुपरिनिश्चित । सुखप्रश्नेषु गोष्ठीषु विवादे वादिना मत ॥

" विजानन्नपि न ब्रूयाद्भर्तुः क्षिप्तोत्तरं वच । प्रवीणोऽपि च मेधावी वर्जयेदभिमानिता ॥

" यद्यप्युच्चैर्विजानीयान्नीचैस्तदपि कीर्तयेत् । कर्मणा तस्य वैशिष्ट्यं कथयेद्विनयान्वित ॥

" आपद्युन्मार्गगमने कार्यकालात्ययेषु च । अपृष्टोऽपि हि नान्वेषी ब्रूयात्कल्याणभाषितम् ॥

" प्रियं तथ्यं च पथ्यं च वदेद्धर्मार्थमेव च । परार्थं देशकालज्ञो देश काल च साधयेत ॥

२५ सतोवाद्यवसरे परोपकारमपि कुर्यादित्यर्थ । तथा ( ।५।३ )

" अपि स्थाणुवदासीत शुष्यन् परिगत क्षुधा । न त्वेवानर्थसंपन्नां वृत्तिमीहेत पंडित " ॥

तथा

" गुह्यं कर्म च मंत्रं च न भर्तुः संप्रकाशयेत् । विद्वेषं च विनाशं च मनसाऽपि न चिंतयेत् ॥

" स्त्रीभिस्तद्दर्शिभि पापैर्वैरिभूतैर्निराकृतैः । एकार्थचर्यां साहित्यं संसर्गं च विवर्जयेत् ॥

३० " वेषभाषानुकरण न कुर्यात्पृथिवीपते । सम्पन्नोऽपि च मेधावी स्पर्द्धेत न च तद्गुणै ॥

---

१ क्ष—गिरिशिखरे अरण्ये वा । २ यवअनट—दत्तान् । ३ तथामर्थे इति मानवीयपाठ । ४ रवंकय-अथमटव—वपुष्मान् । ५ अनटयवघई—नान्यस्यविक्षिपेत्, भर्तुरन्वासने तिष्ठन् दृष्टिमन्यत्र विक्षिपेदिति मु पाठ, क्ष—मुहूर्तान्यत्र । ६ थी मु पाठ । ७ प्रवृद्ध मु पा। ८ स्थाणुरिवासीन । ९ विद्वेषं अ ५।३१। १० दृतै । ११ वेशभाषानुकरण ।

" रागापरागौ जानीयाद्भर्तुः कुशलकर्मवित् । इंगिताकारचेष्टाभ्यस्तदभिप्रायवित्तथा ॥
" तदर्थी तत्कृता वोच्चैराकर्णयति तत्कथा । श्लाघते श्लाघनीयेषु श्लाघ्यमान च नन्दति " ॥
राज्ञा कस्यचित्स्तुतौ क्रियमाणायां स्वयमभ्यभिनन्दन कार्यमित्यर्थः ।
" कथांतराणि स्मरति प्रकुशान् कीर्तयेद्गुणान् । निर्गुण ह्यपि भर्तार आपत्सु न परित्यजेत् " ॥ ४७ ॥
भारते 5
" अग्निं दीप्तमिवासीदेत् राजानमुपशिक्षित' । आशीविषमिव क्रुद्ध प्रभु प्राणधनेश्वरम् ॥
" यत्नेनोपचरेन्नित्य नाहमस्मीति चिंतयेदिति " ॥
राजा क्षिपतीति मत्वा नावगणनीय । किंतु यथा सर्वे सावधानता तथा प्रभौ कार्येत्यर्थ ।
" तत परतरो नास्ति य आपत्सूपतिष्ठते । स्वस्थवृत्तेषु सत्वाद्या नैवयात्यभिलक्ष्य ते ॥
" विपत्सु धर्मधुर्याणां तेषा नामातिरिच्यते । श्लाघ्यायानवनी चैव महतामुपकारिता ॥ 10
" काले कल्याणमाधत्ते स्वल्पापि सुमहोदये । जयाज्ञापय जीवेति नाथ देवेति चादरात् ॥
" रक्षास्यपि हि गृह्यते नित्य छदानुवृत्तिभि । धीसत्वोद्योगयुक्ताना किं दुराप महात्मन ॥
" छदानुवर्तिना लोके क पर: प्रियवादिना ॥
" अलसस्याल्पदोषस्य निर्विद्यस्याकृतात्मन । प्रदानकाले भवति मातापि हि पराङ्मुखी ॥
" ये शूरा ये च विद्वासो ये च सेवाविपश्चित । तेषामेव विकाशिन्यो भोग्या नृपतिसपदः ॥ 15
" आजीव्य सर्वभूताना राजा पर्जन्यवद्भुवि । अनाजीव्य त्यजन्त्येन शुष्क वृक्षमिवाण्डजा ॥ "
चाणक्योऽपि
" सुवर्णपुष्पिता पृथ्वीं विचिन्वति त्रयो जनाः । शूरश्च कृतविद्यश्च यश्च जानाति सेवितुम् ॥ " तथा
" कुल वृत्त तथा शौर्य सर्वमेतन्न गण्यते । दुर्वृत्तेऽप्यकुलीनेऽपि जनो दातरि रज्यते ॥
इत्यादिसेवकलक्षणम् । 20
अथ स्वामिकृत्य नीतिसारे ( ५।६४–६६ )
" अपेक्ष्य हि नृप काल भृत्यानामनुजीविना । कर्मणामानुरूप्येण वृत्ति समनुकल्पयेत् ॥
" स्थाने काले च पात्रे च न हि वृत्ति विलोपयेत् । एतद्वृत्तिविलोपेन राजा भवति गर्हित ॥
" अपात्रवर्षण जातु न कुर्यात्स विगर्हित । अपात्रवर्षणादन्यात्किं स्यात्कोशक्षयादृते ॥
" कुल विद्या श्रुत शौर्य सौशील्य भूतपूर्वता । वयोवस्था च सप्रेक्ष्य आद्रियेत महात्मन ॥ 25
" कुलीनान्नावमन्येत सम्यग्वृत्तान्मनस्विन । त्यजन्त्येते च भर्तार प्रति वा मानहेतुना ॥
" निरालोके हि लोकेऽस्मिन् नासते तत्र पण्डिता । जात्यस्य हि मणेर्यत्र काचेन समता मता ॥ ७१ ॥
" कुशोऽपि हि विवेकज्ञा याति सश्रयणीयता ॥ ७० ॥ यथा
" सर्वैर्गुणैर्विहीनोऽपि स राजा य प्रतापवान् । प्रतापयुक्तात्त्रस्यते परे सिंहान्मृगा इवेति ॥ "
विरक्तस्वामिलक्षणमुक्त कामन्दकेन ( ५।४२–४६ ) 30
" अकोपोऽपि सकोपाभ प्रसन्नश्चापि नि फल । वदत्यकस्माद्दुष्टेति रूक्ष च मुहुरीक्षते ॥

---

१ कुर्यात् । इंगिताकारलिङ्गाभ्यामिङ्गिताकारतत्ववित् ॥ ३४ ॥ इति सुपाठ । २ तामुच्चै ॥ ३६ ॥ । ३ श्लाघ्यमान च—( ३७ ) । ४ कथान्तरेषु प्रहृष्ट: ( ३७ ) । ५ अहापयन्नाप –मु पाठ । ६ इत्यादयन्ति यथा-रवक—रूपेण । ७ महात्मवान् । ८ ऽवमन्तार । ९ निष्फल ।

" विज्ञाप्यमानो वृत्यर्थं सहसोत्थाय गच्छति । समावयति दोषेण वृत्तिच्छेद् करोति च ॥
" साधूक्तमपि तद्वाक्य समर्थयति चान्यथा । आचक्षाणकथाभंगं करोति विरसीभवन् ॥
" उपास्यमान शयने सुप्तवत्तत्र तिष्ठति । यत्नेन बोध्यमानोऽपि सुप्तवच्च विचेष्टते ॥
" इत्यादि ह्यनुरक्तस्य विरक्तस्य च लक्षण । रक्तावृत्तिं समीहेत विरक्तं च परित्यजेदिति ॥ "
५ अत्र षाड्गुण्यसयुतामिति मन्त्रविशेषणमुक्त । तानाह मनुः ( ७।१६१ )
" सधिं च विग्रह चैव यानमासनमेव च । द्वैधीभाव सश्रय च षाड्गुण्य चिंतयेत्सदा ॥ "
तत्र कामन्दक सधि निरूपयति ( ९।१ )
" बलीयसाऽभियुक्तस्तु नृपोऽनन्यप्रतिक्रिय । आपन्न सधिमन्विच्छेत्कुर्वाण कालयापनामिति ॥"
तत्र नीतिसारे । यद्यप्यनेकविधस्तथाप्युपहारसधिर्मैत्रीसन्ध्योरेव प्राधान्यमुक्त ( ९।२१–२२ )
१० " एक एवोपहारस्तु संधिरेष मतो हि न । उपहारस्य भेदास्तु सर्वेऽन्ये मैत्रवर्जिता ॥
" अभियोक्ता बलीयस्त्वादलब्ध्वो न निवर्त्तते । उपहारादृते यस्मात्सधिरन्यो न विद्यते ॥ "
मैत्रीसधिस्तु समयोरेव । क्वचिदन्यजयार्थं विषमयोरपि भवति ।
" कन्यादानाद्युपकारसधयस्तु अनार्ययोवातर्भवति । अतो न ते पृथक निरूपिता ।
अत्रासधेयानाह कामन्दक ( ९।-२३-२४ )
१५ " बालो वृद्धो दीर्घरोगस्तथा ज्ञातिबहिष्कृतः । भीरुको भीरुकजनो लुब्धो लुब्धजनस्तथा ॥
" विरक्तप्रकृतिश्चैव विषयेष्वतिसक्तिमाक् । दुर्भिक्षव्यसनापेतो बलव्यसनसकुल ॥ २५ ॥
" अदेशस्थो बहुरिपुर्युक्त. काले न यश्च न । एतै. सधिर्न कुर्वीत विगृण्हीयात्तु केवल ॥
" एते विगृह्यमाणा हि क्षिप्र याति रिपोर्वश ॥" २६ २७ ॥ तथा ( ९।४५ ४६ )
" सधिः कार्योऽप्यनार्येण सप्राप्योत्सादयेद्धि स ।
२० " सघातवान्यथा वेणुर्निबिडै कटकैर्वृत । न शक्यते समुच्छेत्तु भ्रातृसघातवास्तथा ॥
" बलिना सह योद्धव्यमिति नास्ति निदर्शनं । प्रतिवात हि न घन कदाचिदुपसर्पति ॥ ४९ ॥
" बलीयसि प्रणमता काले विक्रमतामपि । सपदो न विसर्पति प्रतीपमिव निम्नगा ॥ ५० ॥
' राजा न गच्छेद्विश्वास सधितोऽपि हि बुद्धिमान। अद्रोहसमय कृत्वा वृत्रमिद्र पुरावधीदिति "॥५१॥
इति सधि । अथ विग्रह उक्तो नीतिसारे ( १०२ )
२५ " आत्मनोभ्युदयाकाक्षी पीड्यमानः परेण वा । देशकालबलोपेत प्रारभेतेह विग्रह ॥ "
तत्र विग्रहकरणान्याह कामन्दक ( १०।३ )
" राज्यस्त्रीस्थानदेशाना ज्ञानस्य च धनस्य च । अपहारो मदो मान पीडा वैषयिकी तथा ॥"
" वैषयिकी देशसबधिनी । मित्रार्थं चापमानश्च तथा बधुविनाशन ॥ "
" भूतानुग्रहविच्छेदस्तथा मडलदूषण । एकार्थाभिनिवेशित्वमिति विग्रहयोनय " ॥ ४५ ॥
३० कर्त्तव्याकर्त्तव्यविग्रहावाह स एव ( १०।२१ )
" तदात्वे फलसयुक्तमायत्या फलवर्जित । आयत्या फलसयुक्त तदात्वे विफल स्मृत ॥

१ अपर्ण्वैव । २ बलेन । ३ तत्र।४ घबअनटघरई—विचेष्टयेत्।५ यस्मात । ६ घझभ—अलब्धा। ७ शक्तिमान्। ८ अवेसस्थो । ९ नजातु । १० झअनटयबध—यानस्य । ११ घयबअनट—धनस्य च । १२ ब—आयत्यां, कथबअनई—आयत्यां ।

उभयो फलवानुत्तमः । एव त्रैविध्य । उभयमपि मध्यम । यस्तु तदात्वायत्योरफल सोऽधमः ।
विग्रहशमन चावश्य कुर्यादित्याह स एव (१०।१२-१३)
" कुर्यादर्थपरित्याग एकार्थाभिनिवेशने । धनापचारजाते नु विरोध न समाचरेत् ॥
" कदाचिद्विग्रहे पुसा सर्वनाशस्तु जायते । सर्वोपायैस्ततो राजा विग्रह न समाचरेत् ॥
" उपायान्तरनाशे तु स्व त विग्रहमाचरेदिति ।" इति विग्रहः ॥ ५
यानमाह कामन्दक (११-१) " गुणानुरागप्रकृतेर्यात्रा यानमिति स्मृतमिति ।"
तत्काल मनुराह ( अ ७।१८३-१८४ )
' मार्गशीर्षे शुभे मासे यायाद्यात्रां महीपतिः । फाल्गुने वाथ चैत्रे वा मास प्रति यथाबल ॥
' अन्येष्वपि च मासेषु यदा पश्येद्ध्रुवं जय । यदा यायाद्विगृह्यैव व्यसने चोत्थिते रिपो. ॥ '
वर्षादिष्वपीत्यर्थः । मिहिरोऽपि १०
" यात्रा नृपस्य शरदीष्टफला मधौ च छिद्र रिपोर्न नियमोऽस्ति तु केचिदाहुरिति ॥ "
तद्भेदा उक्ता नीतिसारे ( ११।२-६,९-११ )
" विगृह्य सधाय तथा सभूयाथ प्रसगत. । उपेक्षया च निपुणैर्यान पञ्चविध स्मृतं ॥
" विगृह्य याति हि यदा सर्वान् शत्रोर्गणान् बलात् । विगृह्ययान यानज्ञास्तदाचार्याः प्रचक्षते ॥
" अरिर्मित्राणि सर्वाणि स्वमित्रैः सर्वतो बलात् । विगृह्य चारिभिर्गन्तु विगृह्य गमन स्मृत ॥ १५
" सधायान्यत्र या यात्रा पार्ष्णिग्राहेण शत्रुणा । सधाय गमन प्रोक्त तज्जिगीषो· फलार्थिन· ॥
" एकीभूय यदैकत्र सामतै साम्परायिकैः । शक्तिशौर्ययुतैर्यान सभूयगमन हि तत् ॥
" अन्यत्र प्रस्थित· सगादन्यत्रैव च गच्छति । प्रसगयान तत्प्रोक्तमत्र शल्योनिदर्शनं ॥
" रिपु यातस्य बलिन सप्राप्याविकृत फल । उपेक्ष्य तस्मिन्न्यथानमुपेक्षायानमुच्यते ॥
" निवातकवचान्हित्वा हिरण्यपुरवासिन । उपेक्षायानमास्थाय निजघान धनजय " इति ॥ २०
यान चाग्रे पुनर्निरूपयिष्याम । इति यान ॥
आसनमुक्त नीतिसारे (११।१३) " परस्परस्य सामर्थ्याद्विघातादासन स्मृतमिति । "
तथा ( ११।१५-१७ )
" यदा दुर्गस्थित शत्रुर्गृहीतु नैव शक्यते । विगृह्यैनं तदाऽसीत छिन्नास्यासारवीवधान् ॥
" विच्छिन्नवीवधासार प्रक्षीणयवसेंधन । विगृह्यमाणप्रकृतिं कालेनैव शम नयेत् ॥ २५
" अरेश्च विजिगीषोश्च विग्रहे हीयमानयो । सधाय यदवस्थान सधायासनमुच्यते ॥ "
सर्वत्र च देशकालानुरोधेनासन कार्यमिति । इत्यासन ॥
द्वैधीभावोऽप्युक्तो नीतिसारे (११।२४) " द्वैधीभावेन तिष्ठेत काकाक्षिवदलक्षित " इति । तथा
" द्वैधीभावो द्विधा प्रोक्तः स्वतत्रपरतत्रयो । स्वतत्र उक्तो ह्यन्यस्तु य स्यादुभयवेतनः "॥ २७ ॥
इति द्वैध ॥ आश्रय उक्त कामन्दकेन ( ११।२८ ) ३०
" उच्छिद्यमानो बलिना निरुपायप्रतिक्रिय' । कुलोद्भूत सत्यमार्यमाश्रयेत बलोत्कटम् ॥

---

१ तन्निरोध न मु पा । २ उपेक्षा चेति । ३ यात्रायां । ४ वर्तेत । ५ ख—काकाक्षिवद । ६ कुलोद्भूत ।

" बुध्यैवोपक्रमं श्रेयान् फलनिष्पत्तये सदा । उपायेन पदं मूर्ध्नि न्यस्यते मत्तहस्तिना ॥ ४६ ॥
" अयोऽभेद्यमुपायेन द्रवतामुपनीयते ॥ ४७ ॥ लोकप्रसिद्धमेवैतत् वारि वन्हेर्नियामकं ॥ ४९ ॥
" उपायोपगृहीतेन तेनैतत्परिशोष्यते ॥ ५० ॥"

उपाय. कटाहादिप्रक्षेप । अतः सर्वमुपायेन कुर्यादित्यर्थः । मनुः ( ७।१७७ )

५ " यदि तत्रापि सपश्येद्दोष सश्रयकारितं । सुयुद्धमेव तत्रापि निर्विशंकः समाश्रयेत् ॥ "

इत्याश्रय । एवविध मंत्र मंत्रिभि' षाड्गुण्यविदा ब्राह्मणेन च सह कुर्यात् । मनु' ( ७।१७८ )

" सर्वोपायैस्तथा कुर्यान्नीतिज्ञः पृथिवीपति । यथास्याभ्यधिका न स्युर्मित्रोदासीनशत्रव" ॥ इति ।

तान् द्वादशराजमण्डलोक्त्याह याज्ञवल्क्य. ( आचारे ३४५ )

" अरिर्मित्रमुदासीनोऽनंतरस्तत्परःपर । क्रमशो मण्डल चिंत्य सामादिभिरुपक्रमै ॥ "

१० ते च त्रयस्त्रिविधा । सहजाः कृत्रिमा प्राकृताश्चेति । तत्र सहजोऽरि सापत्नभ्रातृपितृव्यतत्पुत्रादि. । कृत्रिमो रिपुर्यस्यापकृतं येनापकृत वा । प्राकृतश्चानतरदेशाधिपतिः । सहज मित्र भागिनेयपैतृ-स्वस्रीयमातृष्वस्रीयादि । कृत्रिम मित्र येनोपकृत यस्य चोपकृत । प्राकृत मित्रमेकातरित-देशाधिपतिः । सहजकृत्रिमशत्रुमित्रलक्षणरहितौ सहजकृत्रिमोदासीनौ । प्राकृतोदासीनो द्व्यतरदेशाधिपतिः ॥

१५ अरिः पुनश्चतुर्विधः । यातव्योच्छेत्तव्यपीडनीयकर्शनीयभेदेन । तत्र यातव्योऽनतरदेशाधिपति । व्यसनी हीनबलो रिक्तप्रकृति । विदुर्गो मित्रहीनो दुर्बलश्चोच्छेत्तव्य । पीडनीयो मन्त्रबलहीनः । प्रबलमत्रयुक्त' कर्शनीय । तथा च राजमानसोल्लासे

" निर्मूलनाशमुच्छेद पीडन बलिनिग्रह । कर्शनं तु पुन प्राहु कोशदण्डापकर्शनादिति ॥ "

मित्र च द्विविध । बृहणीय कर्शनीयमिति । कोशबलहीन बृहणीयं । कोशबलाधिक कर्शनीय ।

२० प्राकृतारिमित्रोदासीनानाह " अनतरस्तत्पर पर" इति । अनतर प्राकृतोऽरिस्तत्पर प्राकृत मित्र । तस्मात्परः प्राकृत उदासीन । शेषा पुन' प्रसिद्धत्वान्नोक्ताः । एतद्राजमण्डल क्रमश. पूर्वादिक्रमेण चिन्त्य । एव चतुर्दिक्षु । त्रयस्त्रय आत्मा चैक इति त्रयोदशराजक मण्डल पद्माकार । ये च पार्ष्णिग्राहादयस्तेऽप्यत्रैवातर्भवति । सामादिभिरित्युक्त तान्सामादीनुपायानाह याज्ञ-वल्क्य ( आचारे ३४६ )

२५ " उपाया साम दान च भेदो दण्डस्तथैव च । सम्यक् प्रयुक्ता सिद्ध्येयुर्दण्डस्त्वगतिका गति ॥

भेद' शत्रुसामन्तादीना परस्पर वैरोत्पादन । स एव

" स जेतु न्यायतोऽशक्यो लुब्धेनाकृतबुद्धिना । सत्यसधेन शुचिना सु सहायेन धीमता ॥

" यथाशास्त्र प्रयुक्त' स सदेवासुरमानुष । जगदानदयेत्सर्वमन्यथा तु प्रकोपयेत् ॥

"अधर्मदण्डन स्वर्गकीर्तिलोकविनाशनम् । सम्यक् दण्डन राज्ञः स्वर्गकीर्तिजयावह ॥" मनुः(८।१२९)

३० " अदण्ड्यान्दण्डयन् राजा दण्ड्यांश्चैवाप्यदण्डयन् । अयशो महदाप्नोति नरक चैव गच्छतीति ॥"

---

१ तेनैव सु पा

दंडप्रकार दंड्यादंड्यव्यवस्था व्यवहारमयूखे ( पृ. १०९ ) द्रष्टव्याम् ।
" एव मन्त्रयित्वांऽतःपुर शोधयित्वा प्रविशेत् । यथोक्त ( नीतिसारे ७।३७ )
" कारयेद्भवनशोधनमादौ मातुरंतिकमपि प्रविविक्षु ।
" आप्तशस्त्रयनुगतश्च विशेच्च संकटे च गहने च न तिष्ठेत् ॥"
तथा "निर्गमे च प्रवेशे च राजा मार्गे समतत । प्रोत्सारितजन गच्छेत्सम्यगाविष्कृतोन्नति. (३९)॥　५
" यात्रोत्सवसमाजे तु जलसंबाधशालिन । प्रदेशानावगाहेत नातिवेल च सपनेत् ॥ ४० ॥
" निषेवितो वर्षधरै. कचुकोष्णीषशालिभि । अत पुरे च विचरेत्कुब्जकैरात्तवामनै ॥ ४१ ॥
" नीचैरत पुरामात्याः शुचयश्चित्तवेदिन । शस्त्राग्निविषवर्जं हि नर्मयेयुर्महीपतिं" ॥ ४२ ॥
अत पुरशोधनमाह कामदक ( ७।४४ )
" आशीतिकाश्च पुरुषाः पचाशीत्यश्च योषित । बुध्येरन्नवरोधानां शौचमाभ्यागारिकाश्च ये ॥　१०
" अभ्यतरगतोऽपीह विश्वास स्त्रीषु न व्रजेत् ॥ ५ ॥
" देवीगृहगतं भ्राता भद्रसेनमहारयत् । मातु शय्यांतरे लीन कारूष चौरस सुतः ॥ ५१ ॥
" न हि देवीगृह गच्छेदात्मीयात्सन्निवेशनात्" ॥ ५० ॥
तथा स्त्रीणा चरितमुक्त नीतिसारे ( ७।५२।५५ )
" विशेषेण तु सयोज्य मधुनेति विलोभित । देवी तु काशिराजेंद्र निजघान रहोगतं ॥　१५
" विषाक्तेन च सौवीर मेखलामणिना नृप । वेण्या शस्त्री समादाय तथा चापि विदूरथ ॥
" इति वृत्त परिहरेन्नरीश्चापि प्रयोजयेत् ॥
" यस्य दारा सुगुप्ता स्युः पौरुषैराप्तकारिभि । सर्वलोकोन्वित तस्य हस्ते लोकद्वय स्थित "॥
एव सावधानोंऽत पुर प्रविशेत् । अथ भार्यागमनमुक्त कामदकेन ( ७।५६ )
" धर्ममिच्छन्नरपति सर्वान्दारानननुक्रम । गच्छेदनुनिशा नित्य वाजीकरणबृंहितः " ॥　२०
वाजीकरणादिक च कामशास्त्रादवगतव्यं । विस्तृतिभयान्नेह निरूपित । नीतिसारे
" विचार्य कार्यावयवान् दिनक्षये विसृज्यलोक प्रमदाहृतक्रिय ॥
" सशंखशब्देन हि साधुपाणिना स्वपितिर्यैसक परमाप्तरक्षित " ॥ तथा
" नयेन जाग्र यनिश नरेश्वरे सुखं स्वपतीह निराधय प्रजा ॥
" प्रमत्तचित्ते सति जाग्रति प्रजा प्रजागरेणास्य जगत्प्रबाधते" ॥ ५८ ॥ इति ॥　२५
एव तिष्ठत फलमाह वराहमिहिर
" आचारस्थ सागराता धरित्रीं भुक्ते दीर्घ कालमुत्खातशत्रु ॥
" यत्राचारस्तत्र धर्मस्य वृद्धिर्धर्मादोगान्देहभेदेऽपि भुक्ते ।" भारते
" धृतिः शमो दम शौच कारुण्य वागनिष्ठुरा । मित्राणा चानभिद्रोह एताश्च समिध श्रिय. ॥"
समिधो वर्द्धनानि । इति सपरिकरस्वामिनिरूपण ।　३०

---

१ भारिनि । २ शौचस्थ । ३ लाजान् विषेण सयोज्य । ४ विषदिग्धेन । ५ शस्त्रं । ६ अद्विवृत्त । ७ च्छत्री चापि । ८ पुरुषै । ९ भोगा । १० इत । ११ आशखशब्देन । १२ स्वपदेसक. । १३ स्वपितीह -भ्रकमयात् ।

अथामात्य । तत्र पुत्रोऽप्यमात्यमध्ये परिगणितो नीतिसारे
" अमात्यो युवराजश्च भुजावेतौ महीपतेरिति । राजपुत्रस्य कृत्यमुक्त "
" पितृसेवापरस्तिष्ठेत्कायवाङ्मानसै सदा । तत्कर्म कुर्यान्नियतं येन तुष्टो भवेत्पिता ॥
" तन्न कुर्याद्येन पिता मनागपि विषीदति ॥" तथा
५ " यस्मिन् पितुर्भवेत्प्रीतिः स्वयं तस्मिन् प्रिय चरेत् । यस्मिन् द्वेष पिता कुर्यात्स्वस्यापि द्वेष्य एव सः ॥
" असंमत विरुद्धं च पितुर्नैव समाचरेत् । प्राप्यापि युवराजत्व प्राप्नुयाद्विकृतिं न च ॥
" स्वसपत्तिमदाच्चैव मातर पितरं तथा । भ्रातर भगिनीं चापि अन्यान्वा राजवल्लभान् ॥
" महाजनांस्तथा राष्ट्रे नावमन्येन्न पीडयेत् । प्राप्यापि महतीं वृद्धिं वर्त्तेत पितुराज्ञया ॥
" पुत्रस्य पितुराज्ञा हि परम भूषण स्मृत । सोदरेषु च सर्वेषु नाधिक्य संप्रदर्शयेत् ॥
१० " भ्रातॄणामवमानेन बहवो हि विनाशिताः । पितुराज्ञोल्लघनेन प्राप्यापि पदमुत्तमम् ॥
" तस्माद्भ्रष्टा भवतीह दासवद्राजपुत्रकाः ॥
" एव गृहाविरोधेन राजपुत्रो वसन् गृहे । त्यागी च सत्वसपन्न सर्वान्कुर्याद्वशे स्वके ॥
" शनै शनैः प्रवर्द्धेत शुक्लपक्षमृगाकवत् ॥
" एव वृत्ता राजपुत्रो राज्यं प्राप्याप्यकंटक । सहायवान् महामात्यो चिर भुक्ते वसुंधरा ॥
१५ एतच्च राजपुत्रविशेषमात्रमुक्त । सामान्यास्तु पूर्वोक्ता वक्ष्यमाणाश्च गुणाः सर्वे अपेक्षिता एव ।
तेषां राजपुत्राणां रक्षण प्रयत्नतः कुर्यादित्याह कामदकः ( ७।१–६ )
" प्रजार्थं श्रेयसे राजा कुर्वीतात्मजरक्षण । लोलुभ्यमानास्तेऽर्थेषु हन्युरेनमरक्षिता ॥
" राजपुत्रा मदोद्धूता गजा इव निरकुशा । भ्रातर चाभिनिघ्नति पितर चाभिमानिन ॥
" राजपुत्रैर्मदोद्धूतै प्रार्थ्यमानमितस्तत । दुःखेन रक्ष्यते राज्य व्याघ्राघ्रातमिवामिषं ॥
२० " रक्ष्यमाणा यदि च्छिद्र कथचित्प्राप्नुवंति ते । सिंहशावा इव घ्नंति रक्षितारमसंशयम् ॥
" विनयोपग्रहान् भूत्यै कुर्वीत नृपति सुतान् । अविनीतकुमार हि कुलमाशु विनश्यति ॥
" विनीतमौरस पुत्र यौवराज्येऽभ्यषेचयेत् । दुष्ट गजमिवोद्धृत्त कुर्वीत सुखबधन ॥" तथा
" लालनीयः पालनीयो भूषणीयस्तथैव च । अर्थशास्त्र शिक्षणीयो यथा स्याद्विनयी सुतः ॥"
दुर्वृत्त प्रत्याह ( ७।७–८ )
२५ " राजपुत्र सुदुर्वृत्त परित्याग हि नार्हति । क्लिश्यमान स पितर परानाश्रित्य हति हि ॥
" व्यसने सज्जम न हि क्लेशयेद्व्यसनाश्रयैरिति ।" इति राजपुत्रनिरूपणम् ।
अमात्यस्त्रिविध । उत्तममध्यमाधमभेदात् । तदुक्त महाभारते ( )
" त्रिविधा पुरुषा लोके उत्तमाधममध्यमा । तेषां च समवेताना गुणदोषान्वदाम्यह ॥
" मंत्रिभिर्हितसयुक्त समर्थैरर्थनिश्चये । मित्रैर्वापि समानार्थैर्बांधवैरप्यगर्हितैः ॥
३० " समन्त्रयित्वा य कर्मप्रारभे सप्रवर्त्तते । धैर्याच्च कुरुते यत्न तमाहुः पुरुषोत्तम ॥
" एकोऽर्थान्विमृशत्येको धर्मे च कुरुते मति । एक कार्याणि कुरुते तमाहुर्मध्यम नर ॥
"गुणदोषावनिश्चित्य दैवमेव व्यपाश्रित । करिष्यामीति य कार्योपेक्षक स नराधम ॥" इति॥

---

१ क्रा वि । २ पेते ।

याज्ञवल्क्यः ( आ ३१२ )

" स मन्त्रिणः प्रकुर्वीत प्राज्ञान्मौलान् स्थिरान् शुचीन्तैः सार्धं चिंतयेद्राज्यं विप्रेणाथ ततः स्वयमिति ॥"

मनु संख्यामप्याह ( ७।५४ )

"मौलान् शास्त्रविदः शूरान् लब्धलक्षान् कुलोद्गतान् सचिवान् सप्त चाष्टौ वा कुर्वीत सुपरीक्षितानिति॥"

लब्धलक्षाश्चतुरान् । मौलान्स्ववंशपरंपरायातान् । नीतिसारे ( ४।२५ ) ५

" कुलीनाः शुचयः शूराः श्रुतवंतोऽनुरागिणः । दंडनीतेः प्रयोक्तारः सचिवाः स्युर्महीपतेः ॥

तथा " स्मृतिस्तत्परतार्थेषु वितर्को ज्ञाननिश्चयः । दृढतामन्त्रगुप्तिश्च मन्त्रिसंपत्प्रकीर्तिता ॥

" सज्जमानमकार्येषु निरुंध्युर्मंत्रिणो नृपं । गुरूणामिव चैतेषां शृणुयाद्वचनं नृपः ॥ "

पुरोहितकृत्यं तत्रैव ( १।४१ )

" त्रय्यां च दंडनीत्यां च कुशलोऽस्य पुरोहितः । अथर्वविहितं कर्म कुर्याच्छांतिकपौष्टिकं ॥ १०

" तादृक्सांवत्सरोऽप्यस्य ज्योतिः शास्त्रस्य चिंतकः । प्रश्नाभिधानकुशलो होरागणिततत्त्ववित् ॥ "

इत्यमात्यादिनिरूपणम् । सुहृन्निरूपणं तु प्रायशः पूर्वं कृतमेव । गुणास्तु केचनोच्यन्ते ।

अमात्यानां सेवकमध्येंऽतर्भावः । सुहृदस्तु मित्राणीति भेदः । तेषां कृत्यमुक्तं कामंदकेन(४।४४–४६)

" नृपस्य ते हि सुहृदस्त एव गुरवो मताः । य एनमुत्पथगतं वारयन्त्यनिवारिताः ॥

" सज्जमानमकार्येषु सुहृदो धारयंति ये । सत्य तेनैव सुहृदो गुरवोगुरवो हि ते ॥ १५

" कृतविद्योऽपि बलिना व्यक्तरागेण रज्यते । रागानुरक्तचित्तः सन् किं न कुर्यादसांप्रतं ॥ "

तथा ( ४।६८–६९ )

" त्यागविज्ञानसत्याढ्यं महापक्षं प्रियंवदं । आयतिक्षेममद्वैध्यं मित्रं कुर्वीत सत्कुलं ॥

" समुत्पन्नेषु कृच्छ्रेषु दारुणेष्वप्यसंशयं । दर्शयत्यच्छहृदयं कुलीनश्चतुरस्सतां ॥

" धर्मार्थकामसंयोगो मित्रात्तु त्रिविधं फलं । यस्मादेतत्त्रयं न स्यात्तन्न सेवेत पंडितः ॥ ७२ ॥ २०

" शुचिता त्यागिता शौर्यं समानसुखदुःखता । अनुरागश्च दाक्ष्यं च सत्यता च सुहृद्गुणाः ॥ ७५ ॥

" तदर्थेहानुरागश्च संक्षिप्तं मित्रलक्षणं । यस्मिन्नेतन्न तन्मित्रं तत्रात्मानं न निक्षिपेत् ॥ ७६ ॥

न विश्वसेदित्यर्थः ।

" प्रायो मित्राणि कुर्वीत सर्वावस्थासु भूपतिः । बहुमित्रो हि शक्नोति वशे स्थापयितुं रिपून् ॥

" न तत्र तिष्ठति भ्राता न पिताऽन्योऽपि वा जनः । पुंसामापत्प्रतीकारे सन्मित्रं यत्र तिष्ठति ॥ २५

" अमित्रान् सर्वतो मित्रैर्निगृह्णीयाद्दृढव्रतैरिति " ॥ इति सुहृन्निरूपणं ॥

अथ कोशः । तस्य मुख्यत्वमाह वराहमिहिरः

" कोशो हि राज्यतरुमूलमतो हि शाखा पक्षी विपक्ष इव किं निधनं करोति ।

" अन्नादिवेंद्रियगणो बहुतस्तथार्थं तत्प्रातिरक्षणविवृद्धिषु यत्नवान्स्यात् " ॥ भारते

"मधुदोहं दुहेद्राष्ट्रं भ्रमरा इव पादपान्वत्सापेक्षी दुहेच्चैव स्तनांश्च न विकुट्टयेत्" ॥ विकुट्टयेच्छोषयेत् ॥ तथा ३०

" यः कश्चिज्जनयेदर्थं राज्ञा रक्ष्यः स मानवः । यो राजकोशं नश्यन्तमाचक्षीत युधिष्ठिर ॥

---

१ नीति सु पा । २ क सु पा
७-८

" श्रोतव्यमस्य च रहो रक्ष्यश्चामात्यतो भवेत् । अमात्या ह्युपहर्तारं घ्नन्ति वा प्रति भारत ॥"
उपहर्तारं राज्ञे निवेदयितारं ।
" राजकोशस्य गोप्तारः राजकोशाविलोपकाः । सर्वे तमनुधावंति स विनश्यत्यरक्षितः ।"
अनुधावति मारयितुं धावंतीत्यर्थः । कामंदकः ( ४।६२-६३ )
५ " वर्द्धमानोऽल्पनिस्रावः स्यात पूजितदैवतः । ईप्सितद्रव्यसपूर्णो ह्य आप्तैरधिष्ठितः ॥
" मुक्ताकनकरत्नाढ्यः पितृपैतामहोचितः । गजेष्वारोपितः साधु शीघ्रयानैरधिष्ठितः ॥
" यत्र राजा तत्र कोशः कोशाधीना हि राजता ।" तथा
" धर्मार्जितो व्ययसहः कोशः कोशज्ञसंमतः ॥ ६३ ॥
" धर्महेतोस्तथार्थाय भृत्यानां भरणाय च । आपदर्थं च संरक्ष्यः कोशः कोशवता सदा॥ ६४ ॥
१० " पुत्रादपि हि संरक्ष्यो भार्यायाः सुहृदस्तथा "। नीतिसारे
" नान्याय्य च व्ययं कुर्यात्प्रत्यवेक्षेत चान्वह । कृषिर्वणिक्पथोदुर्गं सेतु कुंजरबंधनं ॥
" खन्यः करधनादान स्वस्थचित्तोऽपि वर्द्धयेदिति "। भागा उक्ताः शिवधर्मे
" तस्माद्विभाग वित्तस्य जीवनाय प्रकल्पयेत् । भागद्वयं तु धर्मार्थमनित्यं जीवितं यतः ।"
भागत्रयं वित्तस्य एको जीवनाय द्वौ धर्माय । भागपचकं कृत्वा त्रितयं जीवनाय भागद्वयं
१५ धर्मायेति हेमाद्रिः । कृपणाशक्तविषये भारते
" एको गां दशगुर्दद्याद्दश दद्याच्च गोशती । शतं सहस्रगुर्दद्यात्सर्वे समफलाः स्मृता "॥ इति ।
दशांशं दद्यादिति भावः । इति कोशः । राष्ट्रंशुक्र नीतिसारे ( ६।२ )
" राज्यांगानां तु सर्वेषां राष्ट्राद्भवति संभवः । तस्मात्सर्वप्रयत्नेन राजा राष्ट्रं प्रसाधयेत् ॥
" तस्मादसाधून् पापिष्ठान् निघ्नन्पापैर्न लिप्यते । ये ये प्रजा प्रबाधेरन्स्तांस्तान् छिंद्यान्महीपतिः॥
२० " यमार्थो क्रियमाणं हि शंसंत्यागमवेदिनः । स धर्मोऽथ विगर्हंति तमधर्मं प्रचक्षते ॥ ७ ॥
" धर्माधर्मौ विजानन् हि शासनेऽभिरतः सतां । प्रजा रक्षेन्नृप साधु हन्याच्च परिपंथिनः ॥ ८ ॥
" राज्ञोपघातं कुर्वीरन् ये पापा राजवल्लभा । एकैकशः संहतान्वा दुष्टास्तान्परिचक्षते ॥ ९ ॥
" दुष्टानुपांशुदंडेन हन्याद्राजाविलंबितं । अदृश्य वा प्रकाशं वा लोकद्वेष समाश्रितान्॥१०॥ तथा
" अरक्ष्यमाणाः कुर्वंति यत्किंचित्किल्बिषं प्रजा । तस्माच्चु नृपतेरर्द्धं यस्माद्गृह्णात्यसौ करान् ॥
२५ " सर्वतो धर्मषड्भागो राज्ञो भवति रक्षितु । अधर्मादपि षड्भागो भवत्यस्य ह्यरक्षितुः ॥
" यथा बीजांकुरः सूक्ष्मः परिपुष्टोऽभिरक्षितः । काले फलाय भवति साधुस्तद्वदिय प्रजा ॥
" उद्वेजयति तीक्ष्णेन मृदुना परिभूयते । तस्माद्यथार्हतो दंड नयेत्पक्षमनाश्रितः ॥"
याज्ञवल्क्यः (आ ३३६) "पीड्यमाना प्रजा रक्षेत् कायस्थैश्च विशेषतः" इति । भारतेऽपि
" उच्छिद्यते धर्मवृत्तमधर्मो वर्तते महान्। भयमाहुर्दिवारात्रं यदा पापो न वार्यते"॥ इति । राजधर्मेषु
३० " विक्रयं क्रयमध्वानं भक्तं च सपरिव्ययं । योगक्षेम संप्रेक्ष्य वणिजः कारयेत्करान् ॥
" उत्पत्तिं दानवृत्तिं च शिल्पं संप्रेक्ष्य चासकृत् । शिल्पं प्रतिकरानेव शिल्पिनः प्रतिकारयेत् ॥
" तथा यथा न सीदेरन् प्रजाः कुर्यान्महीपतिः । संत्यजंति परिख्यातं राजानमतिखादिन ॥

---

१ वर्द्धमानोऽल्पम् मु. पा । २ ह्य-स्वको । ३ अटनयधयई-राज्य

